

## चतुर्थः पाठः

# gkL;cky dfo lEesyue~



अव्ययप्रयोगः

*(विविध-वेशभूषाधारिणः चत्वारः बालकवयः मञ्चस्य उपरि उपविष्टाः सन्ति। अधः श्रोतारः हास्यकविताश्रवणाय उत्सुकाः सन्ति कोलाहलं च कुर्वन्ति)*



सञ्चालकः – अलं कोलाहलेन। अद्य परं हर्षस्य अवसरः यत् अस्मिन् कविसम्मेलने काव्यहन्तारः कालयापकाश्च भारतस्य हास्यकविधुरन्धराः समागताः सन्ति। एहि, करतलध्वनिना वयम् एतेषां स्वागतं कुर्मः।

गजाधरः – सर्वेभ्योऽरसिकेभ्यो नमो नमः। प्रथमं तावद् अहम् आधुनिकं वैद्यम्

उद्दिश्य स्वकीयं काव्यं श्रावयामि–

**वैद्यराज! नमस्तुभ्यं यमराजसहोदर ।**
**यमस्तु हरति प्राणान् वैद्यः प्राणान् धनानि च ॥**

*(सर्वे उच्चैः हसन्ति)*

कालान्तकः– अरे! वैद्यास्तु सर्वत्र परन्तु न ते मादृशाः कुशलाः जनसंख्यानिवारणे। ममापि काव्यम् इदं शृण्वन्तु भवन्तः–

**चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ।**
**नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥**

*(सर्वे पुनः हसन्ति)*

तुन्दिलः – (तुन्दस्य उपरि हस्तम् आवर्तयन्) तुन्दिलोऽहं भोः। ममापि इदं काव्यं श्रूयताम्, जीवने धार्यतां च–

**परान्नं प्राप्य दुर्बुद्धे! मा शरीरे दयां कुरु ।**
**परान्नं दुर्लभं लोके शरीराणि पुनः पुनः ॥**

*(सर्वे पुनः अट्टहासं कुर्वन्ति)*

चार्वाकः – आम्, आम्। शरीरस्य पोषणं सर्वथा उचितमेव। यदि धनं नास्ति, तदा ऋणं कृत्वापि पौष्टिकः पदार्थः एव भोक्तव्यः। तथा कथयति चार्वाककविः–

**यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।**

श्रोतारः – तर्हि ऋणस्य प्रत्यर्पणं कथम्?

चार्वाकः – श्रूयतां मम अवशिष्टं काव्यम्–

**घृतं पीत्वा श्रमं कृत्वा ऋणं प्रत्यर्पयेत् जनः ॥**

*(काव्यपाठश्रवणेन उत्प्रेरितः एकः बालकोऽपि आशुकवितां रचयति, हासपूर्वकं च श्रावयति )*









बालकः – श्रूयताम्, श्रूयतां भोः! ममापि काव्यम्–

**गजाधरं कविं चैव तुन्दिलं भोज्यलोलुपम्।**
**कालान्तकं तथा वैद्यं चार्वाकं च नमाम्यहम् ॥**

*(काव्यं श्रावयित्वा 'हा हा हा' इति कृत्वा हसति। अन्ये चाऽपि हसन्ति। सर्वे गृहं गच्छन्ति।)*

## शब्दार्थाः

| | | | |
|---|---|---|---|
| **अधः** | – | नीचे | downwards |
| **कोलाहलम्** | – | शोर | noise |
| **काव्यहन्तारः** | – | काव्य को नष्ट करने वाले | destroyers of poetry |
| **कालयापकाः** | – | समय बर्बाद करने वाले | whiling away the time |
| **धुरन्धराः** | – | अग्रणी, श्रेष्ठ | the best |
| **एहि** | – | आयें, आइए | please come |
| **करतलध्वनिना** | – | तालियों से | with clapping sounds |
| **अरसिकेभ्यः** | – | नीरस जनों को | to the disinterested (persons) |
| **स्वकीयम्** | – | अपने | own |
| **मादृशाः** | – | मेरे जैसे | like me |
| **हस्तलाघवम्** | – | हाथ की सफाई | hand's work |
| **तुन्दस्य** | – | तोंद के | enlarged belly |
| **आवर्तयन्** | – | फेरता हुआ | putting hands all over |







| | | | |
|---|---|---|---|
| **धार्यताम्** | – | धारण करें | please bear |
| **परान्नम्** (परा+अन्नम्) | – | दूसरों के अन्न को | other's food |
| **पौष्टिकः** | – | पुष्टि देने वाला | nourishing |
| **प्रत्यर्पणम्** (प्रति+अर्पणम्) | – | लौटाना | repaying |
| **अवशिष्टम्** | – | बचा हुआ, शेष | remaining |
| **उत्प्रेरितः** | – | प्रेरित होकर | being inspired |
| **श्रावयति** | – | सुनाता है | recites |
| **भोज्यलोलुपम्** | – | खाने का लोभी | greedy for food |






1.

| | | |
|---|---|---|
| उपरि | अधः | उच्चैः |
| नीचैः | बहिः | अलम् |
| कदापि | अन्तः | पुनः |
| कुत्र | कदा | एकदा |







**2. मञ्जूषातः अव्ययपदानि चित्वा वाक्यानि पूरयत-**

| | | | | |
|---|---|---|---|---|
| अलम् | अन्तः | बहिः | अधः | उपरि |

(क) वृक्षस्य ................ खगाः वसन्ति।

(ख) ................ विवादेन।

(ग) वर्षाकाले गृहात् ................ मा गच्छ।

(घ) मञ्चस्य ................ श्रोतारः उपविष्टाः सन्ति।

(ङ) छात्राः विद्यालयस्य ................ प्रविशन्ति।

**3. अशुद्धं पदं चिनुत-**

(क) गमन्ति, यच्छन्ति, पृच्छन्ति, धावन्ति। ......................

(ख) रामेण, गृहेण, सर्पेण, गजेण। ......................

(ग) लतया, मातया, रमया, निशया। ......................

(घ) लते, रमे, माते, प्रिये। ......................

(ङ) लिखति, गर्जति, फलति, सेवति। ......................

**4. मञ्जूषातः समानार्थकपदानि चित्वा लिखत-**

| | | | | |
|---|---|---|---|---|
| प्रसन्नतायाः | चिकित्सकम् | लब्ध्वा | शरीरस्य | दक्षाः |

प्राप्य ................

कुशलाः ................

हर्षस्य ................

देहस्य ................

वैद्यम् ................







**5. अधोलिखितानां प्रश्नानाम् उत्तराणि एकपदेन लिखत-**

(क) मञ्चे कति बालकवयः उपविष्टाः सन्ति?

(ख) के कोलाहलं कुर्वन्ति?

(ग) गजाधरः कम् उद्दिश्य काव्यं प्रस्तौति?

(घ) तुन्दिलः कस्य उपरि हस्तम् आवर्त्तयति?

(ङ) लोके पुनः पुनः कानि भवन्ति?

(च) किं कृत्वा घृतं पिबेत्?

**6. मञ्जूषातः पदानि चित्वा कथायाः पूर्तिं कुरुत-**

| | | | | | |
|---|---|---|---|---|---|
| नासिकायामेव | वारंवारम् | खड्गेन | दूरम् | मित्रता | मक्षिका |
| व्यजनेन | उपाविशत् | छिन्ना | सुप्तः | प्रियः | |

पुरा एकस्य नृपस्य एकः ……………… वानरः आसीत्। एकदा नृपः …………… आसीत्।



वानरः …………… तम् अवीजयत्। तदैव एका ………… नृपस्य नासिकायाम् ……………। यद्यपि वानरः ………………व्यजनेन तां निवारयति स्म तथापि सा पुनः पुनः नृपस्य ………………… उपविशति स्म। अन्ते सः मक्षिकां हन्तुं …………… प्रहारम् अकरोत्। मक्षिका तु उड्डीय ………… गता, किन्तु खड्गप्रहारेण नृपस्य नासिका ……… अभवत्। अत एवोच्यते– ''मूर्खजनैः सह ………… नोचिता।''







7. **विलोमपदानि योजयत-**

| | |
|---|---|
| अधः | नीचैः |
| अन्तः | सुलभम् |
| दुर्बुद्धे! | उपरि |
| उच्चैः | बहिः |
| दुर्लभम् | सुबुद्धे! |



## ध्यातव्यम्



अस्मिन् पाठे अधः, अन्तः, बहिः, नीचैः, पुनः इत्यादीनि अव्ययपदानि सन्ति। एषां त्रिषु लिङ्गेषु, त्रिषु वचनेषु सर्वासु विभक्तिषु च एकमेव रूपं भवति, विकारो न जायते।

उक्तञ्च–

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।।

